# संस्कृतशिक्षा

टिप्पणीसमेता

## आदित्यराम भट्टाचार्य्येण

सङ्कलिता

# SANSKRIT SIKSHA

CONTAINING

READINGS IN SANSKRIT

PROSE AND VERSE

WITH SHORT EXPLANATORY NOTES

COMPILED BY

**PANDIT ADITYARAM BHATTACHARYA, M A**

PROFESSOR OF SANSKRIT, MUIR CENTRAL COLLEGE, ALLAHABAD

*FOURTH EDITION*

*Registered under Act XXV of 1867*

PRINTED AT THE INDIAN PRESS ALLAHABAD

1894

PRICE 10 ANNAS ] [ मूल्य ।।=)

# PREFACE.

The following selections in prose and verse have been made for the purpose of being used as a text book by candidates for the Entrance Examination of the Allahabad University The prose pieces have been taken from the *Hitopadesha* and the *Panchatantra* both well known books containing various and interesting readings adapted to the capacity of the less advanced student Care has been taken to select such stories only as may exercise a wholesome effect on the morals of the youthful student besides being the medium of imparting familiarity with idiomatic Sanskrit prose

Similarly the metrical pieces contain precepts from the *Chanakya niti sataka* the *Hitopadesha* and the *Mahabharata* The piece from the last named work wholly dwells on the duties of children to their parents and teachers and a canto from the *Ramayana* presents to the reader an ideal picture of the capital of an old Hindu kingdom and its people

The reader is further referred to the English preface to the *Chanak niti sara sangraha* published separately (for the use of candidate for the Entrance Examination of the Allahabad University for 1889) wherein he will find a few remarks relating to the work

A B

# हितोपदेशः ॥

## कपटि मित्रम्

भक्ष्यभक्षकयोः प्रीतिर्विपत्तेः कारणं महत् ।
शृगालात्पाशबद्धोऽसौ मृगः काकेन रक्षितः ॥

अस्ति मगधदेशे चम्पकवती नामारण्यानी (१)। तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः केनचिच्छृगालेनावलोकितः। तमालोक्या-चिन्तयदसौ। आः कथमेतन्मांसं सुललितं भक्षयामि। भवतु विश्वासं तावदुत्पादयामि। इत्यालोच्योपसृत्याब्रवीत्। मित्र कुशलं ते। मृगेणोक्तम्। कस्त्वम्। जम्बूको ब्रूते। क्षुद्रबुद्धिनामा जम्बूकोऽहम्। अत्रारण्ये बन्धुहीनो मृतवन्निवसामि। इदानीं च त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकम्प्रविष्टोऽस्मि। अधुना तवानुचरेण मया सर्वथा भवितव्यमिति। मृगेणोक्तम् एवमस्तु। ततस्तावस्तङ्गते भगवति मरीचिमालिनि (२) मृगस्य वासभूमिं गतौ। तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य मित्रम्प्रतिवसति। स काकोऽब्रवीत्। सखे मृग कोऽयं द्वितीयः। मृगो ब्रूते। जम्बूकोऽयमस्मत्सख्यमिच्छन्नागतः। तच्छ्रुत्वा काकेनोक्तम्। अकस्मादागन्तुना सह मैत्री न युक्ता।

(१) महारण्यम् ॥ (२) सूर्ये ॥

तथा चोक्तम् ।

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।

मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

तावाहतुः । कथमेतत् । काकः कथयति ।

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकाद्गलितनखनयनो जरद्गवो नाम गृध्रः प्रतिवसति । तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किञ्चित्किञ्चिद्ददति । तेनासौ जीवति ।

अथ कदाचिद्दीर्घकर्णो नाम मार्जारः पक्षिशावकान् भक्षयितुमागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयाकुलैर्महान् कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तम् । कोऽयमायाति । दीर्घकर्णो गृध्रमवलोक्य सभयमाह । हा ! हतोऽस्मि । अथवा ।

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।

आगतन्तु भयं वीक्ष्य प्रतिकुर्याद्यथोचितम् ॥

अधुनास्य संनिधाने पलायितुमक्षमः । तद्यथाभवितव्यं तथा भवतु । तावद्विश्वासमुत्पाद्यास्य समीपमुपगच्छामि । इत्यालोच्योपसृत्याब्रवीत् । आर्य्य त्वामभिवन्दे । गृध्रो ब्रूते । कस्त्वम् । सोऽब्रवीत् । मार्जारोऽहम् । गृध्रो ब्रूते तदपसर । नोचेद्धन्तव्योऽसि मया । मार्जारोऽवदत् । श्रूयतां तावन्मम वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः ।

यतः । ज्ञातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय बध्यः पूज्योऽथवा भवेत् ॥

गृध्रोऽवदत् ब्रूहि किमर्थमागतोऽसि । सोऽवदत् । अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्रतमाचरंस्तिष्ठामि । युष्मांश्च धर्मज्ञान्मम विश्वासभूमयः पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति (१) । ततो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमहमत्रागतः । भवन्तश्चैतादृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः । गृहस्थस्यैष च धर्मः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ॥

यद्यन्नं नास्ति तदा प्रीतिवचनेनापि तावदतिथिः पूज्यः । तथा चोक्तम् ।

तृणानि (२) भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

गृध्रो वदति । मार्जारा हि मांसरुचयः । पक्षिशावकाश्चात्र निवसन्ति । तेनैवं ब्रवीमि । मार्जारो भूमिं (३) स्पृष्ट्वा कर्णौ स्पृशति । मया च धर्मशास्त्रं पठित्वा वीतरागेणेदं व्रतमध्यवसितम् (४) । यतः परस्परं विवदमानानामपि धर्म-

---

(१) युष्मान् धर्मज्ञानरतान् विश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति इति पाठान्तरम् ॥
(२) आसनार्थमुपकल्पनीयानि ॥
(३) भूमिस्पर्शपूर्वकं कर्णस्पर्शः शपथप्रकारः ॥
(४) सङ्कल्प्य निश्चयेनावलम्बितम् ॥

शास्त्राणां अहिंसा परमो धर्म इत्यत्रैकमत्यम् ।

तदुक्तं च ।

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥

अन्यच्च ।

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥

योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे ( १ ) कः कुर्यात्पातकं नरः ॥

एवं विश्वास्य तरुकोटरे स्थितः । ततो दिनेषु गच्छत्सु तं गृध्रमल्पशक्तिं ज्ञात्वा पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति । अथ येषामपत्यानि खादितानि तैः शोकार्तैर्विलपद्भिर्जिज्ञासा ( २ ) परिज्ञाय ( ३ ) मार्जारः कोटरान्निःसृत्य पलायितः । इतस्ततो निरूपयद्भिः पक्षिभिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि । अनन्तरञ्चानेनैव जरद्गवेनास्माकं शावकाः खादिता इति पक्षिभिर्निश्चित्य स गृध्रो व्यापादितः ।

( १ ) आक्षेपे दग्धेति विशेषणम् ॥
( २ ) कर्त्तरि तृतीया तैः क्रियमाणां जिज्ञासां परिज्ञायेत्यर्थः ॥
( ३ ) जिज्ञासा समारब्धा तत् परिज्ञाय इति पाठान्तरम् ॥

अतोऽहं ब्रवीमि । अज्ञातकुलशीलस्येत्यादि । इत्याकर्ण्य जम्बूकः सकोपमाह । मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एव । तद्भवता सह कथमेतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

अतो यथायं मृगो मम बन्धुस्तथा भवानपि । मृगो ब्रूते । किमनेनोत्तरोत्तरेण । सर्वैरेकत्र विश्रम्भालापैः सुखिभिः स्थीयताम् । यतः ।

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥

काकेनोक्तमेवमस्तु । ततः प्रातः सर्वे यथाभिमतं देशं गताः । एकदा तेन जम्बूकेन सुनिभृतमुक्तम् । सखे मृग । एतस्मिन्वनैकदेशे शस्यसम्पूर्णं क्षेत्रमस्ति । तदहन्त्वां नीत्वा दर्शयामि । तथा कृते सति स मृगः प्रत्यहं तत्र गत्वा शस्यं खादति । अथ क्षेत्रपतिना क्षेत्रं दृष्ट्वा पाशस्तत्र नियोजितः । अनन्तरं पुनरागतो मृगः पाशैर्बद्धोऽचिन्तयत् । को मामितः कालपाशादिव व्याधपाशात्त्रातुं मित्रादन्यः समर्थः । तत्रान्तरे चागत्योपस्थितो जम्बूकोऽचिन्तयत् । फलितं (१) तावदस्माकं कपटप्रबन्धेन । मनोरथसिद्धिरपि मे बाहुल्याद्भविष्यति । यतः एतस्योत्कृत्यमानस्य मांसासृग्लिप्तान्यस्थीनि प्राप्तव्यानि मया ।

(१) निष्पन्नं सिद्धमिति यावद् भावे निष्ठा ॥

मृगस्तं दृष्ट्वोल्लसितो ब्रूते । सखे शृगाल छिन्धि मम बन्धनम् । सत्वरन्त्रायस्व माम् । यतः ।

आपत्सु मित्रं जानीयाद्युद्धे शूरं धने शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥

जम्बूकः पाशान्मुहुर्विलोक्याचिन्तयत् । दृढस्तावदयम्बन्धः । ब्रूते च । सखे स्नायुनिर्मिता एते पाशाः । तदद्य भट्टारकवारे । (१) कथमेतान्दन्तैः स्पृशामि । मित्र नान्यथा मन्तव्यम् । प्रभाते यत्त्वया वक्तव्यं तत्कर्तव्यमेव । अनन्तरञ्च काकः प्रदोषकाले तं मृगमनागतमवलोक्यान्विष्यंस्तथाविध दृष्ट्वोवाच । सखे किमेतत् । मृगोऽवदत् । अवधीरितसुहृद्वाक्यस्य फलमेतत् । तथा चोक्तम् ।

सुहृदां हितकामानां यः शृणोति न भाषितम् ।
विपत्संनिहिता तस्य स नरः शत्रुनन्दनः (२) ॥

काको ब्रूते । स शृगालः क्व । मृगेणोक्तम् । मन्मांसार्थी तिष्ठत्यत्रैव । काकोऽवदत् । मित्र उक्तमेव मया पूर्वम् ।

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ( ३ ) ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥

---

( १ ) आदित्यवासरे ॥

( २ ) शत्रूणामानन्दवर्द्धक ॥

( ३ ) भवद्विषये मे मम अपराधोऽनिष्टचिन्तनादिरिति यावत् नास्ति इत्युक्तिमात्र वीद्धव्यस्य विश्वासकारणं विश्वासप्रयोजकं भवितु नार्हतीत्याशय ॥ अथवा मे मम अपराधो दोषो नास्ति ॥ इत्येतद् विश्वासकारणं विश्वासप्रयोजकं न भवतीति शेष । दोषशून्योऽहं न कस्यापि द्वेष्य इति विश्वासोऽनिष्टकर इति भाव ॥

निःश्वस्य । अरे वञ्चक किं त्वया पापकर्मणा कृतम् ।

उपकारिणि विश्रब्धे(१)शुद्धमतौ यःसमाचरति पापम् ।
तं जन मसत्यसंधं भगवति वसुधे कथं वहसि ॥

अथवा स्थितिरियं (२) दुर्जनानाम् ।

प्राक् पादयोः पतति खादति (३) पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं (४) निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥

( अथ प्रभातकाले क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन्काकेनाऽवलोकितः । आलोक्य च काकेनोक्तम् ) मित्र त्वमात्मानं मृतवत्संदर्श्य वातेनोदरं पूरयित्वा पादान् स्तब्धीकृत्य तिष्ठ । अहं तव चक्षुषी चञ्च्वा विलिखामि। ततो यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरेण पलायिष्यसे । ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेनावलोकित स्तथाविधो मृगः । आः स्वयं मृतोऽयमित्युक्त्वा बन्धनान्मोचयित्वा पाशं संवरितुं (५) सयत्नो बभूव । ततः काकशब्दं श्रुत्वा मृगः सत्वरमुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना निक्षिप्तलगुडेन शृगालो हतः ।

---

( १ ) विश्वासवशात् निःशङ्के ॥ ( २ ) आचरणशैली ॥

( ३ ) दुर्जनपक्षे पृष्ठशब्देन परोक्षदेशो मांसशब्देन हितं खादतीति क्रियापदेन च नाशनं लक्ष्यते ॥ ( ४ ) दुर्जनपक्षे दोषं प्रमादमिति यावत् ॥

( ५ ) संहर्त्तुं ॥

## ॥ बुद्धि बलम् ॥

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काकी कनकसूत्रेण कृष्णसर्पमघातयत् ॥

कस्मिंश्चित्तरौ वायसदम्पती निवसतः। तयोश्चापत्यानि तरुकोटरावस्थितेन कृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी ब्रूते । स्वामिंस्त्यज्यतामयं तरुः । अत्रैवास्मात्कृष्णसर्पाद्‌वयोः संततिर्न भविष्यति (१) ।
यतः ।

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥

वायसो ब्रूते । प्रिये न भेतव्यम् । वारं वारं मयैतस्य महापराधः सोढः । इदानीं पुनर्न क्षन्तव्यः । वायस्याह । कथमनेन बलवता सार्द्धं भवान्विग्रहीतुं समर्थः । वायसोऽब्रवीत् । अलमनया शङ्कया ।

यतः

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥

वायस्याह । कथमेतत् । वायसः कथयति ।

अस्ति मन्दराभिधाने पर्वते दुर्दान्तो नाम सिंहः । स च सर्वदा पशुवधं विदधान एवास्ते ततः सर्वैः पशुभिर्मिलि-

(१) "न भविष्यति" न स्थास्यति ।

त्वा सिंहो विज्ञप्तः । मृगेन्द्र किमिति सर्वपशुच्छेदः क्रियते । वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुं ढौकयामः (१)। सिंहेनोक्तम् एवमस्तु । ततः प्रभृत्येकैकं पशुं दददः समासते । अथ कदाचिद्वृद्धशशकस्य कस्यचिद्वारः समागतः । सोऽचिन्तयत् ।

त्रासहेतोर्विनीतिस्तु (२) क्रियते (३) जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥

तन्मन्दं मन्दमुपगच्छामि। ततः सिंहोऽपि क्षुधापीडितः कोपात्तमुवाच । कुतस्त्वं विलम्बादागतोऽसि । सोऽब्रवीत् । नायं ममापराधः । पथि सिंहान्तरेण बलाद्धृतः सम्पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि । सिंहः सकोपमाह । सत्वरं गत्वा मां दर्शय स दुरात्मा क्वास्ते । ततः शशकस्तं गृहीत्वा गम्भीरकूपं गतः । अत्रागत्य पश्यतु स्वामीत्युक्त्वा तस्मिन्कूपजले तस्यैव प्रतिबिम्बं दर्शितवान् । ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः ।

वायसाह । श्रुतं मया सर्वम् । यथा कर्तव्यं ब्रूहि । वायसोऽवदत् । अत्रासन्ने सरसि राज्ञः पुत्रः प्रत्यहमागत्य स्नाति । तदङ्गादवतारितं तीर्थशिलानिहितं (४) कनकसूत्रं चञ्च्वा धृत्वानीयास्मिन्कोटरे धारयिष्यसि । अथ कदाचित्

(१) उपायनरूपेण प्रापयाम सामान्ये लट् ॥
(२) विनीति विनय ॥ (३) विपश्चैरिति शेष । (४) तीर्थं घट्ट ॥

स्नातुं जलं प्रविष्टे राजपुत्रे वायसा तदमुष्ठितम् । ततः कनकसूत्रानुसरणप्रवृत्तैः पुरुषैः कोटरे निरूप्यमाणे कृष्णसर्पो दृष्टो व्यापादितश्च ॥

## ॥ स्वपक्षपरित्यागादनिष्टाधिगमदृष्टान्तः ॥

आत्मापक्षपरित्यागात् (१) परपक्षेषु यो रतः ।
स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥

अस्ति शृगालः कश्चित् स्वेच्छया नगरोपान्ते भ्राम्यन्नीलीभाण्डे निपतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृतवत्सन्दर्श्य स्थितः । अथ नीलीभाण्डस्वामिनोत्थाप्यासौ दूरं नीत्वा (२) धृतः । ततोऽसौ वनङ्गत्वाऽऽत्मानं नीलवर्णमवलोक्याचिन्तयत् । अहमिदानीमुत्तमवर्णः तदात्मोत्कर्षं किं न साधयामि । इत्यालोच्य शृगालानाहूयोक्तन्तेन । अहम्भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधीरसेनाभिषिक्तः । पश्यत मम वर्णम् । तदद्यारभ्यास्मदाज्ञयास्मिन्नरण्ये व्यवहारः कार्यः । शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपात प्रणम्योचुः । यथाज्ञापयति देवः । अनेनैव क्रमेण सर्वेषु पशुष्वरण्यवर्त्तिष्वाधिपत्यन्तेन स्वज्ञातिभिरावृतेनाधिक्यं साधितम् । ततस्तेन व्याघ्रसिंहादीनुत्तमपरिजनान्प्राप्य शृगा-

( १ ) ल्यबलोपे पञ्चमी परित्यागं कृत्वेत्यर्थ ॥ (२) धृत स्थापित ॥

लानवलोक्य च लज्जमानेनावज्ञाय दूरीकृताः स्वज्ञातयः। ततो विषण्णाञ्छृगालानवलोक्य केनचिद्वृद्धशृगालेन प्रतिज्ञातम्। मा विषीदत यदनेनानीतिज्ञेन वयम्मर्मज्ञाः परिभूताः। तद्यथायं नश्यति तन्मया विधेयम्। यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानमिमं मन्यन्ते। तद्यथायं परिचीयते तत्कुरुत। तत्र चैवमनुष्ठेयम्। यत्सर्वे सन्ध्यासमये तत्संनिधाने महारवमेकदा (१) करिष्यथ। ततस्तं शब्दमाकर्ण्य स्वभावात्तेनापि शब्दः कर्तव्यः।

ततः शब्दादभिज्ञाय स व्याघ्रेण हन्तव्यः। तथानुष्ठिते तद्वृत्तम्॥

---

(१) युगपत्॥

# पञ्चतन्त्रम् ॥

## एकताविपर्य्यये कुफलदृष्टान्तः ॥

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः ।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः ॥

कस्मिंश्चित्सरोवरे भारण्डनामा पक्ष्येकोदरः पृथग्ग्रीवः प्रतिवसति स्म, तेन च समुद्रतीरे परिभ्रमता किञ्चित्फलममृतकल्पं तरङ्गाक्षिप्तं सम्प्राप्तम् । सोऽपि भक्षयन्निदमाह अहो बहूनि मयामृतप्रायाणि समुद्रकल्लोलाहृतानि फलानि भक्षितानि । परमपूर्वोऽस्यास्वादः तत्किम्पारिजातहरिचन्दनतरुसम्भवम्? किं वा किञ्चिदमृतमयफलमव्यक्तेनापि विधिनापतितम् (१) । एवन्तस्य ब्रुवतो द्वितीयमुखेनाभिहितम् । भो यद्येवन्तन्ममापि स्तोकम्प्रयच्छ येन जिह्वासौख्यमनुभवामि । ततो विहस्य प्रथमवक्त्रेणाभिहितम् । आवयोस्तावदेकमुदरमेका तृप्तिश्च भवति ततः किं पृथग्भक्षितेन । वरमनेन शेषेण प्रिया तोष्यते । एवमभिधाय तेन शेषम्भारण्डयाः प्रदत्तम् । सापि तदास्वाद्य प्रहृष्टतमानेकचाटुपरा बभूव । द्वितीयं

(१) अव्यक्तेन अतीन्द्रियेण अमूर्त्तेनति यावत् । विधिना दैवेन । आपतितमुपस्थितम् ॥

मुखस्तद्दिनादेव प्रभृति सोद्वेगं सविषादश्च तिष्ठति । अथा-न्येद्युर्द्वितीयमुखेन विषफलम्प्राप्तम् । तद्दृष्ट्वा परमाह । भो निस्त्रिंश (१) पुरुषाधम निरपेक्ष मया विषफलमासादितम् । तत्तवापमानाद्भक्षयामि । अपरेणाभिहितम् मूर्ख मा मैवङ्कुरु एवं कृते द्वयोरपि विनाशो भविष्यति । अथैवं वदता तेना-पमानेन फलम्भक्षितम् । किम्बहुना, द्वावपि विनष्टौ ।

---

## ब्राह्मणसक्तुकलशयोः ॥

अनागतवतीञ्चिन्तामसम्भाव्याङ्करोति यः ।
स एव पाण्डुरः शेते सोमशर्म्मपिता यथा ॥

कस्मिंश्चिन्नगरे कश्चित्स्वभावकृपणो नाम ब्राह्मणः प्रति वसति स्म । तेन भिक्षार्जितैः सक्तुभिः भुक्तशेषैः कलशः सम्पूरितः । तञ्च घटं नागदन्ते (२) ऽवलम्ब्य तस्याधस्ता-त्खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति । अथ कदा-चिद्रात्रौ सुप्तश्चिन्तयामास, यत्परिपूर्णोऽयङ्कुटस्तावत्सक्तुभिर्व-र्त्तते । तद्यदि दुर्भिक्षम्भवति तदनेन रूपकाणां शतमुत्पद्यते । ततस्तेन मयाऽजाद्वयङ्गृहीतव्यम् । ततः षाण्मासिकप्रसववशा-त्ताभ्याम् यूथम्भविष्यति । ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिर्महिषीर्महिषीभिर्वडवाः वडवाप्रसवतः प्रभूता अश्वा

---

(१) निर्गतस्त्रिंशतोऽङ्गुलिभ्य [ परिमाणे ] निस्त्रिंशः खड्ग । अत्र च निस्त्रिंशशब्दस्य निष्ठुरार्थे लक्षणा ॥ (२) नागदन्तो द्रव्याद्यासङ्गार्थं गृहभित्तौ प्रोतो दारुविशेषस्तस्मिन् ॥

भविष्यन्ति, तेषां विक्रयात्प्रभूतं सुवर्णम्भविष्यति, सुवर्णेन चतुःशालङ्गृहं सम्पद्यते । ततः कश्चिद्ब्राह्मणो मम गृहमागत्य प्राप्तवरां (१) रूपाढ्याङ्कन्याम्दास्यति, तत्सकाशात्पुत्रो मे भविष्यति। तस्याहं सोमशर्म्मेति नाम करिष्यामि । ततस्तस्मिन् जानुचलनयोग्ये सञ्जातेऽहम्पुस्तकङ्गृहीत्वाश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि । अत्रान्तरे सोमशर्म्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति । ततोऽहं ब्राह्मणी कोपाविष्टोऽभिधास्यामि, गृहाण तावद् बालकम् । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति, ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि । एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः । सक्तुभिः पाण्डुरतां गतः ॥

## ॥ त्रयाणाम् मत्स्यानाम् ॥

अनागतविधाता (२) च प्रत्युत्पन्नमतिस्तथा (३) ।
द्वावेतौ सुखमेधेते यद्भविष्यो ( ४ ) विनश्यति ॥

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भवि-

---

( १ ) प्रियतेऽस्मिन्नति योगेन लक्षणया वा वरशब्दस्यात्र वरग्रहणयोग्यकालरूपोऽर्थः ॥ ( २ ) अनागतस्य सम्प्रति अनुपस्थितस्यापि दुःखस्य किन्तु मनसा पूर्वमेवालोचितस्य प्रतीकारार्थं पूर्वस्मादेव कालात् विधाता सविधाता यतिता इति यावत् ॥ ( ३ ) प्रत्युत्पन्ना कार्य्यकाले कृत्याकृत्यनिर्द्धारणविषये झटिति जाता मतिर्विवेको यस्य स ॥ ( ४ ) दैवाधीनं सर्वं । पुरुषकारः सर्वथा निरर्थक इति भ्रान्त्या यद् भविष्यति तद्भविष्यति इति दैव एव कृतनिर्भर इत्यर्थः ॥

प्यद्बुद्धिरिति त्रयो मत्स्याः प्रतिवसन्ति स्म । अथ कदाचित्तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तं । अहो बहुमत्स्योऽयं ह्रदः । कदाचिदपि नास्माभिरन्वेषितः । तदद्य तावदाहारवृत्तिः सञ्जाता । सन्ध्यासमयश्च संवृत्तः । ततः प्रभातेऽत्रागन्तव्यमिति निश्चयः । अथ तेषां तत् कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता तौ मत्स्यावाहूयेदमूचे । अहो श्रुतं भवद्भ्यां यन्मत्स्यजीविभिरभिहितं । तद्रात्रावपि गम्यतां किञ्चिन्निकटं सरः । उक्तं च ॥

अशक्तैर्बलिनः शत्रोः कर्त्तव्यं प्रपलायनम् ।
संश्रितव्यो (१) ऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥

तन्नूनं प्रभातसमये ते मत्स्यजीविनोऽत्र समागत्य मत्स्यसङ्क्षयं करिष्यन्ति । एतन्मम मनसि वर्त्तते । तन्न युक्तं साम्प्रतं क्षणमप्यत्रावस्थातुं ।

उक्तं च ।

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देशभङ्गं कुलक्षयम् ॥

परदेशभयाद् भीता बहुमाया नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥

यस्यास्ति सर्वत्र गतिः स कस्मात् ।
स्वदेशरागेण हि याति नाशम् ॥

(१) संश्रयितव्य इत्यस्यैव साधुत्वे संश्रितव्य इति प्रयोग छन्दोनुरोधात् ॥

तातस्य कूपोऽयमिति ब्रुवाणाः ।
क्षारं जलं कापुरुषाः पिबन्ति ॥

भवद्भ्याञ्च यत् प्रतिभाति तत् कर्त्तव्यम् । इत्युक्त्वा स ह्रदान्तरं गतः सह परिजनेन ॥

अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम् । भविष्यदर्थे प्रमाणाभावात् तत् कुत्र किं समाधातव्यम् । तदुत्पन्ने यथा कार्य्यमनुष्ठेयम् ॥

ततो यद्भविष्येणोक्तम् ।

यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥

अरक्षितं तिष्ठति दैवरक्षितम् ।
सुरक्षितं दैवहतं विनश्यति ॥

जीवत्यनाथोऽपि वने विसर्ज्जितः ।
कृतप्रयत्नोऽपि गृहे विनश्यति ॥

तदहं पितृपैतामहिकमेतत् सरस्त्यक्त्वान्यत्र न यास्यामि ।

अथ प्रभाते तैर्मत्स्यजीविभिर्जालेन बद्धः सन् प्रत्युत्पन्नमतिः मृतवदात्मानं दर्शयित्वा स्थितः । ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गम्भीरनीरं प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितश्च ॥

---

## ॥ विरोधिविशेषेषूपायविशेषाः ॥

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥

अस्ति कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचिदरण्ये स्वयं मृतो गजः समासादितः । तस्य समन्तात् परिभ्रमति । परं कठिनां त्वचं भेत्तुं न शक्नोति । अत्रावसरे इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ । अथ समागतं दृष्ट्वा स क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरयुगलः सविनयमुवाच । स्वामिन् त्वदीयोऽहं लागुडिकः (१) स्थितस्त्वदर्थे गजमिमं रक्षामि तदेनं भक्षयतु स्वामी । तं प्रणतं दृष्ट्वा सिंहः प्राह, भो नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि । तत् तवैव गजोऽयं मया प्रसादीकृतः । तत् श्रुत्वा शृगालः सानन्दमाह । युक्तमिदं स्वामिनो निजभृत्येषु । अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ । तमपि दृष्ट्वासौ व्यचिन्तयत्, अहो एकस्तावत् दुरात्मा प्रणिपातेनापवाहितः । तत् कथमिदानीमेनमपवाहयिष्यामि । नूनं शूरोऽयम्, न खलु भेदं विना साध्यो भविष्यति । उक्तञ्च यतः ।

न यत्र शक्यते कर्तुं साम दानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥

(१) लगुडेन यष्टया चरतीति लागुडिकः यष्टिधारी भृत्य इत्यर्थः ॥

किञ्च । सर्व्वगुणसम्पन्नोऽपि भेदेन बध्यते । उक्तञ्च यतः ।

अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम् (१) ॥

एवं सम्प्रधार्य्य तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः स ससम्भ्रममुवाच, माम कथमत्रभवान् मृत्युमुखे प्रविष्टः येनैष गजः सिंहेन व्यापादितः स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः । तेन च गच्छता मम समादिष्टं । यदि कश्चिदिह व्याघ्रः समायाति, तत् त्वया सुगुप्तं ममावेदनीयम् । येन वनमिदं मया निर्व्याघ्रं कर्त्तव्यम् । यतः पूर्व्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः । तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि । तत् श्रुत्वा व्याघ्रः संत्रस्तस्तमाह, भो भागिनेय देहि मे प्राणदक्षिणाम् । ततस्त्वया तस्यात्र चिरायायातस्यापि मदीया कापि वार्त्ता नाख्येया । एवमभिधाय सत्वरं पलायाञ्चक्रे । अथ गते व्याघ्रे तत्र कश्चिद्द्वीपी समायातः । तमपि दृष्ट्वासौ व्यचिन्तयत् । दृढदंष्ट्रोऽयञ्चित्रकः । तदस्य पार्श्वादस्य गजस्य यथा चर्म्म-

(१) अत्यच्छेन शुद्धाशयेन निर्म्मलेन च । अविरुद्धेन द्वेषशून्येन अरूक्षेण च ( रूक्षताच मुक्तानाम् दुष्टत्वापादिका )। सुवृत्तेन सदाचारेण सुवर्त्तुलेन च । अन्तर्भिन्नेन स्वपक्षात् पृथक्कृतेन लब्धवेधेन च। इत्थमक्रुते मौक्तिकपक्षे च विशेषणानि क्रमेण व्याख्येयानि । गम्यमाने चातिरिक्ते मुमुक्षुपक्षे विमलमतित्वं मत्सरादिदोषशून्यत्वं विशुद्धाचारत्वं जीवात्मपरमात्मनो भेदज्ञानवत्त्वं च यथायोगं पूर्व्वोक्तैर्विशेषणैः प्रतिपाद्यन्ते ॥

च्छेदो भवति तथा करोमि । एवं निश्चित्य तमभ्युवाच, भो भगिनीसुत किमिति चिराद्दृष्टोऽसि कथञ्च बुभुक्षित इव लक्ष्यसे तदतिथिरसि मे । एष गजः सिंहेन हतस्तिष्ठति । अहं चास्य तदादिष्टो रक्षपालः । परं तथापि यावत् सिंहो न समायाति तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज । स आह, माम यद्येवं तन्न कार्य्यं मे मांसाशनेन, यतो जीवन्नरो भद्रशतानि पश्यति । तत् सर्वथा तदेव भुज्यते यदेव परिणमति । तदहमितोऽपयास्यामि । शृगाल आह, अधीर ! विस्रब्धो भूत्वा भक्षय त्वं, तस्यागमनं दूरतोऽपि तवाहं निवेदयिष्यामि । तथानुष्ठिते द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेनाभिहितम् । भो भगिनीसुत गम्यतां, एष सिंहः समायाति । तच्छ्रुत्वा चित्रको दूरं प्रनष्टः ( १ ) । अथ यावदसौ तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावदतिसंक्रुद्धोऽपरः शृगालः समाययौ । अथ तमात्मतुल्यजातपराक्रमं दृष्ट्वैनं श्लोकमपठत् ।

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥

ततस्तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य दिशोभाजं ( २ ) कृत्वा स्वयं सुखेन चिरकालं तन्मांसं बुभुजे ॥

---

( १ ) अदर्शनं गत पलायित इति यावत् ॥

( २ ) दिशोभाजं कृत्वा विद्राव्येत्यर्थः । दिशोभाजमित्यत्र दिशाउपपदाङ्-ञ्विः ।—दाम्भदिरा. शाखोऽन्यस्मिन् ॥

## मण्डूककृष्णसर्पयोः ॥

अस्ति ( १ ) कस्मिंश्चित्कूपे गङ्गदत्तो ( २ ) नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद्दायादैरुद्वेजितोऽरघट्टघार्टी ( ३ ) समारुह्य निष्क्रान्तः । अथ तेन चिन्तितम्, यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्त्तव्यः । उक्तञ्च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥

एवं चिन्तयन् बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोऽप्यचिन्तयत्, यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि । उक्तञ्च—

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनैव कण्टकम् ॥

---

( १ ) अस्तीत्यव्ययं प्रसिद्धार्थं ॥

( २ ) ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम् इति ह्रस्वभावः ॥

( ३ ) अरश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्यते रच्यते सोऽरघट्टः कूपभेद इत्यमरटीकायां महेश्वरः । अरं शीघ्रं घट्यते चाल्यत इति अरघट्टः जलोत्तोलनार्थं कूपोपरि निबद्धकाष्ठभेद इति वाचस्पत्यम् । अरहट इति भाषायाम्प्रसिद्धस्तथा च प्रहेलिका शिर पर साहै गङ्गजल मण्डमाल गल माहि । वाहन वाको वृष भयो शिव कहिये पै नाहि ॥ इति । अरघट्टकाष्ठैः सह घटिताः मज्जनालम्बनार्थं घाणे आरोहावरोहकाष्ठसरणि ॥

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्, एह्येहि प्रियदर्शन एहि, तच्छ्रुत्वा सर्पश्चिन्तयामास । य एष मामाह्वयति, स स्वजातीयो न भवति यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति । तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति । उक्तञ्च—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥

कदाचित्कोऽपि मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्य चिद्भक्षणार्थं मामाह्वयति । आह च भोः को भवान् । स आह, अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः । तच्छ्रुत्वा सर्प आह, भो अश्रद्धेयमेतद्यत्तृणानां वह्निना सह सङ्गमः । उक्तञ्च—

यो यस्य जायते बध्यः स स्वप्नेऽपि कथञ्चन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ॥

गङ्गदत्त आह, भोः सत्यमेतत् । स्वभाववैरी त्वमस्माकम् । परं परपरिभवात् प्राप्तोऽहं ते सकाशम् । उक्तञ्च—

सर्वनाशे च सञ्जाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत्प्राणधनानि च ॥

सर्प आह, कथय कस्मात्ते परिभवः । स आह, दायादेभ्यः । सोऽप्याह, क्व ते आश्रयो वाप्यां कूपे तडागे ह्रदे वा

तत्कथय स्वाश्रयम् । तेनोक्तम् पाषाणचयनिबद्धे कूपे, । सर्प आह अहो अपदा वयं, तन्नास्ति तत्र मे प्रवेशः प्रविष्टस्य च स्थानं नास्ति यत्र स्थितस्तव दायादान् व्यापादयामि । तद्गम्यताम् । उक्तञ्च ।

> यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
> हितं च परिणामे यत्तदाद्यं (१) भूतिमिच्छता ॥

गङ्गदत्त आह भो· समागच्छ त्वम् । अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति, तत्र स्थितस्त्वं लीलया दायादान् व्यापादयिष्यसि । तच्छ्रुत्वा सर्पो व्यचिन्तयत्, अहं तावत्परिणतवयाः, कदाचित्कथञ्चिन्मूषकमेकं प्राप्नोमि । तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान्मण्डूकान् भक्षयामीति ।

एवं विचिन्त्य तमाह, भो· गङ्गदत्त यद्येवं तदग्रे भव येन तत्र गच्छाव· । गङ्गदत्त· प्राह, भो· प्रियदर्शन ! अहं त्वां सुखोपायेन तत्र नेष्यामि स्थानञ्च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीया इति । सर्प आह, साम्प्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादा· । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः ।

---

( १ ) आद्यं भक्षयितव्यम् ॥

अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते च तेन शनैः शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम् । भद्र निःशेषितास्ते रिपवस्तत्प्रयच्छान्यन्मे किञ्चिद्भोजनं, यतोऽहं त्वयात्रानीतः । गङ्गदत्त आह, भद्र कृतं त्वया मित्रकृत्यम् । तत्साम्प्रतमनेनैव घटिकायन्त्रमार्गेण गम्यतामिति । सर्पः प्राह, भो गङ्गदत्तेन सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ, नो चेत्सर्वानपि भक्षयिष्यामीति । तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत् । अहो किमेतन्मया कृतं सर्पमानयता, तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते ।

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः ।
स करोति न सन्देहः स्वयं हि विषभक्षणम् ॥

तत्प्रयच्छाम्यस्यैकं प्रतिदिनं सुहृदम् ।

तथा च—सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ॥

न स्वल्पस्य कृते (१) भूरि नाशयेन्मतिमान्नरः ।
एतदेवाहि पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम् ॥

(१) कृते इति अव्ययं निमित्तार्थवाचकम् ॥

एव निश्चित्य नित्यमेकैकमादिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति ।

अथान्यदिने तेनापरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः । तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्प्रलापपरः कथञ्चिदपि न विरराम ।

अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम् । केवलमेको गङ्गदत्तस्तिष्ठति । ततः प्रियदर्शनेन भणितम्, भो गङ्गदत्त बुभुक्षितोऽहम् । निःशेषिताः सर्वे मण्डूकाः । तद्दीयतां मे किञ्चिद्भोजनं यतोऽहं त्वयात्रानीतः । स आह भो मित्र न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्य्या, तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान् विश्वास्यात्रानयामि । स आह मम तावत्त्वमभक्ष्यो भ्रातृस्थाने, तद्यद्येवं करोषि तत्साम्प्रतं पितृस्थाने भवसि, तदेवं क्रियतामिति । सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितपूजोपयाचितोऽस्मात्कूपाद्विनिष्क्रान्तः (१) । प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति । अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच, भद्रे ! क्रियतां स्तोकं साहाय्यम् । यतश्चिरपरिचितस्ते गङ्गदत्तः; तद्गत्वा तत्सकाशं कुत्रचित् जलाशये प्रविश्य मम सन्देशं कथय । यदागम्यतामेकाकिनापि भव-

( १ ) विविधाभ्यो देवताभ्य उपकल्पितानि मनसा अर्पयितुसङ्कल्पितानि पूजोपयाचितानि पूजोपहारा ( बलयो ) येन स ॥

ता द्रुततरम् यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तु शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम् ( १ ) । गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह, भद्र गङ्गदत्त स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति । तच्छीघ्रं गम्यतामिति ॥

तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापम् ।
क्षीणा नरा निष्करुणा भवन्ति ॥
आख्याहि भद्रे प्रियदर्शनस्य ( २ ) ।
न गङ्गदत्तः पुनरेति कूपम् ॥

---

## शशकपिञ्जलयोः ॥

---

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥

अस्ति ( ३ ) कस्मिंश्चिद्वृक्षे पुराहं ( ४ ) वसामि । तत्रा-

---

( १ ) जन्मजन्मार्जितं पुण्यं मम पणभूतम्[illegible] यदि तव [illegible] नाशो मे दण्डो भवेदिति ॥

( २ ) कर्मणि षष्ठी सम्बन्धसामान्याद्वा ॥

( ३ ) अन्तरिक्षव्यय प्रसिद्ध्यर्थे ॥

( ४ ) कस्यचित् काकस्योक्तिरियम् ॥

यस्मात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्तनेन च पर्य्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति। अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालि प्रायं देशं गतः । ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान् अहो किमद्य कपिञ्जलो नायातः । किं केनापि पाशेन बद्धः उताहोस्वित् केनापि व्यापादितः । सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति । एवं मे चिन्तयतो बहून्यहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः । मयापि कपिञ्जलनिराशत्वेन न निवारितः अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽप्यत्रैव समायातः ।

अथासौ कोटरान्तरगतं शशकं दृष्ट्वा साक्षेपमाह, भोः शशक न त्वया सुन्दरं कृतं यन्ममावसथस्थाने प्रविष्टोऽसि तच्छीघ्रं निष्क्रम्यताम् । शशक आह, न तवेदं गृहं किन्तु ममैव । तत् किं मिथ्या परुषाणि जल्पसि । उक्तञ्च ।

वापीकूपतडागानां देवालयकुजन्मनाम् (१) ।
उत्सर्गात्परतः स्वाम्यमपि कर्त्तुं न शक्यते ॥

(१) कु पृथ्वी तस्यां जन्म येषां ते कुजन्मानो वृक्षास्तेषाम् ॥

तस्मान्नैतद् गृहं न तवेति । कपिञ्जल आह, भो यदि स्मृतिं प्रमाणीकरोषि (१) तदागच्छ मया सह । येन स्मृति पाठकं पृष्ट्वा स यस्य ददाति स गृह्णातु । तथानुष्ठिते मयापि चिन्तितम् । किमत्र भविष्यति । मया द्रष्टव्योऽयं न्यायः । ततः कौतुकादहमपि तावनुप्रस्थितः । अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गाभिमुखं नदीतटमासाद्य कृतकुशोपग्रहो निमीलितैकनयन ऊर्ध्वबाहुरर्द्धपादस्पृष्टभूमिः श्रीसूर्याभिमुख इमां धर्मोपदेशनामकरोत् । अहो असारोऽयं संसारः । क्षणभङ्गुराः प्राणाः । स्वप्नसदृशः प्रियसमागमः । इन्द्रजालवत् कुटुम्बपरिग्रहोऽयम् तद्धर्मं मुक्त्वा नान्या गतिरस्ति ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह । भो भोः कपिञ्जल । एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तदेनं पृच्छावः । कपिञ्जल आह, ननु स्वभावतोऽयमस्माकं शत्रुभूतोऽस्ति । तद्दूरे स्थितौ पृच्छावः । कदाचिदस्य व्रतविकल्पं (२) सम्पद्यते । ततो दूरस्थितावूचतुः भो भोः तपस्विन् धर्मोपदेशक आवयोर्विवादो वर्त्तते । तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं देहि, यो हीनवादी स ते भक्ष्य इति । स आह, भद्रौ मा मैवं वदतम् । निवृत्तोऽहं नरकपातमार्गात् । अहिंसैव धर्ममार्गः । तन्नाहं भक्षयिष्यामि । परं जयपराज-

(१) निर्णायकत्वेन स्वीकरोषि ॥

(२) व्रतभङ्गः ॥

यन्निर्णयं करिष्यामि किन्त्वहं वृद्धो दूरान्न यथावत् शृणोमि। एवं ज्ञात्वा मम समीपवर्त्तिनौ भूत्वा ममाग्रे न्याय्यं वदतम्। येन विज्ञाय विवादपरमार्थं वदतो मे परलोकबाधो न भवति। तस्माद्विस्रब्धौ मम कर्णोपान्तिके स्फुटं निवेदयतम्। किं बहुना, तेन क्षुद्रेण तथा तौ, तूर्णं विश्वासितौ, यथा तस्योत्सङ्गवर्त्तिनौ सञ्जातौ। ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः अन्यो दंष्ट्राककचेन च। ततो गतप्राणौ भक्षिताविति ॥

## चतुर्णाम् मित्राणाम् ॥

असाधना (१) अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् (२) ॥

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरस्थो महोच्छ्रायवान् नाना विहङ्गोपभुक्तफलः कीटैरावृतकोटरश्छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो (३) महान् ॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स

(१) साधन पूर्वग्रन्थसम्पत् तद्रहिता ॥
(२) आखननात्याखुर्मूषक ॥
(३) न्यग्रोधो वटः ॥

कदाचित्प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत्पश्यति ताव-ज्जालहस्तोऽतिकृष्णतनुः स्फुटितचरण (१) ऊर्ध्वकेशो यम-किङ्कराकारो नरः सम्मुखो बभूव । अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत् । यदयं दुरात्माद्य ममाश्रयवटपादपसम्मुखोऽ-भ्येति । तन्न ज्ञायते किमद्य वटवासिनां विहङ्गमानां विनाशो भविष्यति न वा । एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान् प्रोवाच भो अयं दुरात्मा लुब्धकोजालतण्डुलहस्तः समभ्येति । तत्सर्वथा तस्य न विश्वसनीयम् । एष जालं प्रसार्य्य तण्डुलान् प्रक्षेप्स्यति । ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः । एवं वदतस्तस्य स लुब्धकस्तत्र वटतल आगत्य जालं प्रसार्य्य सिन्दुवारसदृशांस्तण्डुलान (२) प्रक्षिप्य नातिदूरं गत्वा निभृतं स्थितः । अथ ये पक्षिणस्तत्र स्थितास्ते लघुपतन-कवाक्यार्गलया निवारितास्तांस्तण्डुलान् हालाहलाङ्कुरानिव वीक्षमाणा निभृतास्तस्थुः । अत्रान्तरे चित्रग्रीवो नाम कपो-तराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान् दूरतोऽपि पश्यन्लघुपतनकेन निवार्य्यमाणोऽपि जिह्वालौ-ल्याद्भक्षणार्थमपतत्सपरिवारो निबद्धश्च ॥

अत्रान्तरे लुब्धकस्तान् बद्धान् विज्ञाय प्रहृष्टमनाः प्रोद्य-तयष्टिस्तद्वधार्थं प्रधावितः । चित्रग्रीवोऽप्यात्मानं सपरिवारं

(१) परुषलक्षणैः पथि कण्टकैः क्षतपादः । यद्वा विपादिकाङ्कितपादः ॥
(२) सिन्दुवारो निर्गुण्डी ॥

बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतानूचे । अहो न भेतव्यम् ।

उक्तञ्च—व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते ।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥

तत्सर्वे वयं हेलयोड्डीय सपाशजाला अस्यादर्शनं गत्वा मुक्तिं प्राप्नुमः । नोचेद्भयविक्लवाः सन्तो हेलया समुत्पातं न करिष्यथ ततो मृत्युमवाप्स्यथ ॥

तथानुष्ठिते लुब्धको जालमादायाकाशे गच्छतां तेषां पृष्ठतो भूमिस्थोऽपि पर्य्यधावत् । तत ऊर्द्ध्वाननः श्लोकमपठत्

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी ।
यावच्च विवदिष्यन्ते (१) पतिष्यन्ति न संशयः ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात्तत्पृष्ठलग्नोऽनुससार । अथ दृष्टेरगोचरतां गता विज्ञाय लुब्धको निराशो निवृत्तः ॥

चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच भो निवृत्तः स दुरात्मा लुब्धकः तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे । तत्र च मम सुहृद्धिरण्यको नाम मूषकः ( २ ) सर्वेषां पाशच्छेदं करिष्यति ।

---

( १ ) विमतावात्मनेपदम् ॥

( २ ) मूष स्तेये भौवादिकः । कर्त्तरि ण्वुल् । मूषिक इति तु मुष्णाते "मुषेर्दीर्घश्च" इत्यनेनोणादिसूत्रेण किकन्प्रत्यये साधु ॥

एवन्ते कपोताश्चित्रग्रीवेण सम्बोधिता महिलारोप्ये नगरे हिरण्यकबिलदुर्गं प्रापुः । हिरण्यकोऽपि सहस्रमुखबिलदुर्गं प्रविष्टः सन्नकुतोभयः सुखेनास्ते, । अथवा साध्विदमुच्यते ॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥

तथा च—न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
तत्कर्म्म साध्यते राज्ञां दुर्गेणैकेन यद्रणे ॥

शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः । 5ग
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच । भो भो मित्र हिरण्यक सत्वरमागच्छ । महती मे व्यसनावस्था वर्त्तते । तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन् प्रोवाच, भोः को भवान् किमर्थमायातः कीदृक्ते व्यसनावस्थानं तत् कथ्यतामिति । तच्छ्रुत्वा चित्रग्रीव आह, भोश्चित्रग्रीवो नाम कपोतराजोऽहन्ते सुहृत्तत्सत्वरमागच्छ गुरुतरम् प्रयोजनमस्ति। तदाकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो निष्क्रान्तः । अथवा साध्विदमुच्यते ॥

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम् (१) ॥

---

( १ ) अपीतिशेष ॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह । भोः किमेतत् । स आह प्राप्तं मयैतद् बन्धनं जिह्वालौल्यात् । साम्प्रतं पाशविमोक्षं कुरु मा विलम्बं । तदाकर्ण्य चित्रग्रीवस्य पाशं छेत्तुमुद्यतं तं स आह । भद्र मा मैवं कुरु । प्रथमं मम भृत्यानां पाशच्छेदं कुरु तदनु ममापि च । तच्छ्रुत्वा कुपितो हिरण्यकः प्राह । भो न युक्तमुक्तम्भवता यतः स्वामिनोऽनन्तरं भृत्या । स आह, भद्र मामैवं वद, मदाश्रयाः सर्वे एते वराका अपरं स्वकुटुम्बं परित्यज्य समागताः । तत्कथमेतावन्मात्रमपि सम्मानं न करोमि, उक्तञ्च ।

यः सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।

वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति । अथवा दुरात्मा लुब्धकः समभ्येति तन्नूनं मम नरकपात एव । उक्तञ्च ।

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।

सुखी स्यान्नरकं याति परत्रेह च सीदति ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह, भोः ! वेद्म्यहं राजधर्मम् । परं मया तव परीक्षा कृता तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि । भवानप्यनेन विधिना बहुकपोतपरिवारो भविष्यति, उक्तञ्च ।

कारुण्यं संविभागश्च (१) यस्य भृत्येषु सर्वदा ।
सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह । मित्र गम्यतामधुना स्वाश्रयं प्रति, भूयोऽपि व्यसने प्राप्ते समागन्तव्यम् । इति तान् सम्प्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत् । अथवा साध्विदमुच्यते ।

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना अचिन्तयत् । अहो बुद्धिरस्य हिरण्यकस्य शक्तिश्च दुर्गसामग्री च । तदीदृगेव विधिर्विहङ्गानां बन्धनमोक्षात्मकः । अहं च न कस्यचिद्विश्वसिमि चलप्रकृतिश्च । तथाप्येनं मित्रं करोमि । उक्तञ्च ।

अपि सम्पूर्णतायुक्तैः कर्त्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमुदीक्षते ॥

एवं सम्प्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान् एह्येहि भो हिरण्यक एहि । तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत् । किमन्योऽपि

(१) अत्र विजयलब्धस्य धनस्य अंशतो भृत्यसात् करणं संविभागः ॥

कश्चित् कपोतो बन्धनशेषस्तिष्ठति येन मां व्याहरति । आह च । भोः को भवान् स आह, अहं लघुपतनको नाम वायसः तत् श्रुत्वा विशेषादन्तर्लीनो हिरण्यक आह, भो द्रुतं गम्यतामस्मात् स्थानात्। वायस आह, अहं तव पार्श्वे गुरुकार्य्येण समागतः, तत्किं न क्रियते मया सह दर्शनम् । हिरण्यक आह, न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनमिति । स आह, भोश्चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम् । तेन मम महती प्रीतिः सञ्जाता । तत् कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भवति । तत्क्रियतां मया सह मैत्री हिरण्यक आह, अहो त्वं भोक्ता। अहं भोज्यभूतः । तत् का त्वया सह मम मैत्री तद्गम्यतां मैत्रीविरोधभावात्। उक्तञ्च ।

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः (१) ॥

तथा च—यो मित्रं कुरुते मूढ़ आत्मनोऽसदृशं कुधीः ।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥

तद् गम्यतामिति । वायस आह, भो हिरण्यक एषोऽहं तव दुर्गद्वार उपविष्टः । यदि त्वं मैत्रीं करोषि ततोऽहं प्राणधारणं करिष्यामि । अन्यथा प्रायोपवेशनं मे स्यादिति । हिरण्यक आह, भोस्त्वया वैरिणा सह कथं मैत्रीं करोमि उक्तञ्च ॥

(१) वि वैपरीत्ये विपुष्ट । यद्वा पुष्ट साधारण विपुष्टो विशेषपुष्ट ॥

वैरिणा नहि सन्दध्यात्सुश्लिष्टेनापि सन्धिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥

वायस आह, भोस्त्वया सह दर्शनमपि नास्ति कुतो वैरम्? तत्किमनुचितं वदसि, हिरण्यक आह, द्विविधं वैरं भवति सहजं (१) कृत्रिमं च । तत्सहजवैरी त्वमस्माकम् । उक्तम् ।

कृत्रिमं नाशमभ्येति वैरं द्राक्कृत्रिमैर्गुणैः (२) ।
प्राणदानं विना वैरं सहजं याति न क्षयम् ॥

वायस आह, भोः द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि । तत्कथ्यताम् । हिरण्यक आह, भोः कारणेन निर्वृत्तं कृत्रिमम् तत्तदर्होपकारकरणाद् गच्छति (३) । स्वाभाविकं पुनः कथमपि न गच्छति । तद्यथा नकुलसर्पाणां शष्पभुङ्नखायुधानां, (४) जलवह्न्योर्देवदैत्यानां सपत्नीनां लुब्धकहरिणानां सज्जनदुर्जनानाम् ।

वायस आह । अस्त्येतत्तथापि श्रूयताम् ॥

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥

---

(१) सहजं स्वाभाविकम् ॥

(२) द्राक् झटिति ॥

(३) तानि तानि कार्याणि साधयितुमर्हा ये उपकारास्तेषां करणात्साधनात् ( अनन्तरं ) ॥

(४) शष्पाणि बालतृणानि भुञ्जते ते गोमृगादय । नखायुधा व्याघ्रादय. ॥

मृद्घट इव सुखभेद्यो दुःसन्धान (१) श्च दुर्जनो भवति ।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च ॥

तथा च—

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥

एवं च—सतां साप्तपदं (२) मैत्रमित्याहुर्विबुधा जनाः ।

तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत् । विदग्धवचनो (३)ऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च । तद्युक्तमनेन मैत्रीकरणम् । ततः प्रभृति तावपि द्वौ सुभाषितगोष्ठी (४) सुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि मांसशकलानि मेध्यानि बलिशेषाण्यन्यानि वत्सला (५) हृतानि पक्वान्नविशेषाणि हिरण्यकार्थमानयति । हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषाँल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति ।

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सर्वदैव गोष्ठीं करोति । अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच ।

---

(१) दुःखेन सन्धानं मेलनं यस्य सः ॥
(२) सप्तभिः पदैः सम्भाषणशब्दैः सम्पद्यते इति साप्तपदम् ॥
(३) विदग्धानां पण्डितानां वचनमिव वचनं यस्य ॥
(४) सदालाप ॥
(५) भावप्रधानो निर्देशः ॥

भद्र हिरण्यक विरक्तिः सञ्जाता मे साम्प्रतं देशस्यास्योपरि, तदन्यत्र यास्यामि। हिरण्यक आह, भद्र किं विरक्तेः कारणम्। स आह, भद्र श्रूयताम्। अत्र देशे महत्यानावृष्ट्या दुर्भिक्षं सञ्जातम्। दुर्भिक्षत्वाज्जनो बुभुक्षापीडितः कोऽपि बलिमात्रमपि न प्रयच्छति। अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय पाशाः प्रगुणीकृताः सन्ति। अहमप्यायुःशेषतया पाशेन बद्ध उद्धरितोऽस्मि (१)—एतद्विरक्तेः कारणम्। तेनाहं विदेशं चलित इति बाष्पमोक्षं करोमि। हिरण्यक आह, अथ भवान् क्व प्रस्थितः। स आह, अस्ति दक्षिणापथे वनगहनमध्ये महासरः। तत्र त्वत्तोऽधिकः परमसुहृत् कूर्मो मन्थरको नाम। स च मे मत्स्यमांसखण्डानि दास्यति तद्भक्षणेन तेन सह सुभाषितगोष्ठीसुखमनुभवन् सुखेन कालं नेष्यामि। नाहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि।

हिरण्यक आह, यद्येवं तदहमपि त्वया सह गमिष्यामि। वायस आह, अहं तावदाकाशगतिस्तत्कथं भवतो मया सह गमनम्। स आह, यदि मे प्राणान् रक्षसि तदा स्वपृष्ठमारोप्य मां तत्र प्रापयिष्यसि। नान्यथा मम गतिरस्ति। तत् श्रुत्वा सानन्दं वायस आह, यद्येवं तद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि। तच्छ्रुत्वा हिरण्यकस्तत्क्षणादेव तदुपरि

(१) उद्धरणमुद्धरः स संजातोऽस्येत्युद्धरितः, उद्धृतः इति यावत्। तारकादेराकृतिगणत्वादितच्। उद्धारित इति पाठस्तु साधीयान्॥

समारूढः । सोऽपि शनैः शनैस्तमादाय तत्परः प्राप्तः । ततो लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि देशकालविद्सामान्यकाकोऽयमिति (१) ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः । लघुपतनकोऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच, भो मन्थरक आगच्छागच्छ तव मित्रमहं लघुपतनको नाम वायसश्चिरात्सोत्कण्ठः समायातः । तदागत्यालिङ्गय माम् ।

उक्तञ्च—किं चन्दनैः सकर्पूरैस्तुहिनैः किञ्च शीतलैः ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥

तथा च—केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदाञ्च परित्राणं शोकसन्तापभेषजम् ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुरानन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच, एह्येहि मित्र आलिङ्गय माम्, चिरकालान्मया त्वं न सम्यक् परिज्ञातः तेनाहं सलिलान्तः प्रविष्टः ।

एवमुक्ते लघुपतनको वृक्षादवतीर्य्य समालिङ्गितवान् । एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुरात्मचरित्रवृत्तान्तम् । हिरण्यकोऽपि मन्थरकस्य (२) प्रणामं कृत्वा वायसाभ्यासे समुप-

(१) न विद्यते अन्यैः काकैः सह सामान्यं यस्य स चासौ काकश्चेति तथा ॥
(२) कर्मणि षष्ठी ॥

विष्टः । अथ स समालोक्य मन्थरको लघुपतनकमाह, भोः कोऽयं मूषकः कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्यानीतः । तदत्र स्वल्पकारणेन भाव्यम् । तत् श्रुत्वा लघुपतनक आह, भो हिरण्यको नाम मूषकोऽयम्, मम सुहृद् द्वितीयमिव जीवितम् ॥

मन्थरक आह, भद्र हिरण्यक भवति सुहृद्यमसन्दिग्धं यः (१) क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेऽपि भक्षयति ॥

तथा च—आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत् ।

वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम् ।

तत्स्वागतं (२) भवतः स्वगृहवदास्यतामत्र सरस्तीरे । अपरं, विदेशवासजमपि वैराग्यं त्वया न कार्य्यम् । यतः

को धीरस्य मनस्विनः स्वविषयः को वै विदेशः स्मृतो ।

यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्ज्जितम् ॥

यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते ।

तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥

---

(१) लघुपतनको वायस ॥

(२) श्रीमन्मथनं भावे क्त ॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान् भवति स कथञ्चिदपि न सीदति । उक्तञ्च ॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः । अथायान्तं ससम्भ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यको निकटवर्त्तिनं शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमाश्रितः । अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकमुवाच, एह्येहि सखे मन्थरक मृगोऽयं तृषार्त्तोऽत्र समायातः सरसि प्रविष्टः तस्य शब्दोऽयं न मानुषसम्भव ( १ ) इति । तच्छ्रुत्वा मन्थरको देशकालोचितमाह । भो लघुपतनक यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति तन्न तृषार्त्त एष नूनं लुब्धकत्रासितः । तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वेति । उक्तञ्च ।

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः ।
दिशोऽवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥

तच्छ्रुत्वा चित्राङ्ग आह, मन्थरक ! ज्ञातं त्वया सम्यङ्मे त्रासकारणम् । अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः । मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति । तच्छ-

( १ ) सम्भवस्यमात्रवि व सम्भवो हेतु मानुष सम्भवो शब्द न ॥

एवापतन्ति मे दृष्टेव किञ्चिद्गमनं स्थानं लुब्धकानाम् । तदाकर्ण्य मन्थरक आह, भो चित्राङ्ग श्रूयतां नीतिशास्त्रम् ॥

> द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
> हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥

तद्गम्यतां शीघ्रं सघनं वनं यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः । अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच, भो मन्थरक गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः तच्चित्राङ्ग त्वं विस्रब्धो जलाद् बहिर्भव । ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन् सरसि मध्याह्नसमये वृक्षच्छायाधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति । अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः । अहो किमद्य सुहृन्न समायातः, किं सिंहादिभिः क्वापि व्यापादितः उत लुब्धकैः अथवानले, प्रपतितो गर्त्ताविषमे (१) वा नवतृणलौल्यादिति । अथवा साध्विदमुच्यते ।

> स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
> किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥

अथ मन्थरको वायसमाह, भो लघुपतनक अहं हिरण्यकश्च तावद् द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित्तं जीवन्तं पश्यसीति ।

(१) गर्तोपलसमन्तात् विषमे दुष्प्रापणे स्थाने ॥

तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति (१) तं दृष्ट्वा शोकव्याकुलमनास्तमवोचत्। भद्र! किमिदम्। चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव। अथवा युक्तमेतत्,

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात् (२)।
प्रायेण प्राणिनां भूयो दुःखावेगोऽधिको भवेत् ॥

ततश्च बाष्पावसाने चित्राङ्गो लघुपतनकमाह भो मित्र सञ्जातोऽयं तावन्मम मृत्युः। तद्युक्तं सम्पन्नं यद्भवता सह मे दर्शनं सञ्जातम्। उक्तञ्च ॥

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम्।
तद् द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितेष्वभिहितम्। तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ ॥

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम्।
तत् क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥

तत् श्रुत्वा लघुपतनक आह, भद्र न भेतव्यमस्मद्विधैर्मित्रैर्विद्यमानैः यावदहं द्रुततरं हिरण्यकं गृहीत्वा आगच्छामि। अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति। उक्तम्।

(१) कूटेन कपटप्रबन्धेन निर्मितेन पाशेन नियन्त्रितो बद्धः ॥
(२) उत्तरार्द्धान्वयः ॥

सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकञ्च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किञ्चिज्जीविताशया संश्लिष्ट आह,

आपन्नाशाय विबुधैः कर्त्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥

हिरण्यक आह, भद्र त्वं तावन्नीतिशास्त्रज्ञो दक्षमतिः तत्कथमत्र कूटपाशे पतितः । स आह, भो न कालोऽयं विवादस्य । तद्यावत् स पापात्मा लुब्धकः समभ्येति तावद् द्रुततरं कर्त्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह हिरण्यकः । किं मय्यपि समायाते लुब्धकाद् बिभेषि । एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम तं दृष्ट्वा लघुपतनको हिरण्यकमाह, अहो न शोभनमापतितम् । हिरण्यक आह, किं स लुब्धकः समायाति । स आह, आस्तां तावल्लुब्धकवार्त्ता एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामः । यदि स पापात्मा लुब्धकः समागमिष्यति, तदहं तावत् समुत्पतिष्यामि त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति ।

एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि। अत्रान्तरे स्वल्पप्राप्तो मन्थरकः। हिरण्यक आह, भद्र न युक्तमनुष्ठितं भवता, यदत्र समायातः; तद्भूयोऽपि द्रुततरं गम्यतां यावदसौ लुब्धको न समायाति। मन्थरक आह, भद्र किं करोमि न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुम्। तेनाहमत्रागतः अथवा साध्विदमुच्यते।

दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात्॥

वरं प्राणपरित्यागो न वियोगो भवादृशैः।
प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः। तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात् खण्डितः। अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः। लघुपतनको वृक्षमारूढः। हिरण्यकश्च समीपवर्ति बिलं प्रविष्टः, अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्, अचिन्तयच्च। यद्यपि कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं सम्पादितः। तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति। एवं विचिन्त्य तं दर्भैः संछाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः। अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्य्यदेवयत्। कष्टं भोः कष्टमापतितम्॥

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।

तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥

यदि तावत् कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम् । अपरमपि मित्रं परं मन्थरकसमं न स्यात् । उक्तञ्च ।

असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा ।

आपद्विमोक्षणं चैव मित्रस्यैतत् फलत्रयम् ॥

तदस्य पश्चान्नान्यः सुहृन्मे । तत्किं ममोपर्य्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः । यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशस्ततो देशत्यागस्ततो मित्रवियोग इति । अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्म्मस्य । उक्तञ्च ।

कायः सन्निहितापायः सम्पदः क्षणभङ्गुराः ।

समागमाः सापगमाः सर्वेषामेव देहिनाम् ॥

तथा च—क्षते प्रहारा निपतन्त्यभीक्ष्णं ।

धनक्षये दीप्यति (१) जाठराग्निः ॥

आपत्सु वैराणि समुद्भवन्ति (२) ।

छिद्रेष्वनर्था बहुलीभवन्ति ॥

अहो साधूक्तम् केनापि ।

(१) वर्द्धते ॥

(२) उत्तिष्ठन्ति ॥

प्राप्ते भये परित्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥

अत्रान्तरे चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ, अथ हिरण्यक आह, अहो किं वृथा प्रलपितेन तद्यावदेष मन्थरको दृष्टिगोचरं न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति । उक्तञ्च ।

केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥

अन्यच्च—अतीतलाभस्य सुरक्षणार्थं ।
भविष्यलाभस्य च सङ्गमार्थम् ॥
आपत्प्रपन्नस्य च मोक्षणार्थं ।
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः ॥

तच्छ्रुत्वा वायस आह ; भोः यद्येवं तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य मार्गे गत्वा किञ्चित्पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखिष्यामि ; येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति । अत्रान्तरे त्वया दर्भमयानि पाशानि खण्डनीयानि । येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति । चित्राङ्ग आह, भोः भद्रोऽयं त्वया दृष्टो मन्त्रः । नूनं मन्थरकोऽयं मुक्तो मन्तव्य इति । उक्तञ्च ।

छिद्रं वा यदि वाच्छिद्रं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः ॥

तदेवं क्रियतामिति । तथानुष्ठिते स लुब्धकस्तथैव मार्गोपजलपल्वलतीरस्थं चित्राङ्गं वायसयनाथमपश्यत् (१) । तद् दृष्ट्वा हर्षितमना व्यचिन्तयत् । नूनं पाशबन्धनवेदनया वराकोऽयं मृगः सावशेषजीवितः । पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृतः तद्वश्योऽयं मे कच्छपः सुयन्त्रितत्वात् । तदेनमपि तावद् गृह्णामीति । इत्यवधार्य्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत् । एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतम् । मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्त्तिनं पल्वलं प्रविष्टः । चित्राङ्गोऽप्यप्राप्तस्यापि तस्य तत उत्थाय वायसेन सह पलायितः । एतस्मिन्नन्तरे विलक्षो (२) विषादपरो लुब्धको निवृत्तो यावत् पश्यति, तावत् कच्छपोऽपि गतः । ततश्च बहुविध विलप्य स्वगृहं गतः । अथ तस्मिन् व्याधे दूरतरं गते सर्वेऽपि ते काककूर्म्ममृगमूषकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म ।

एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्य्यः

---

(१) वायसयनाथ काकसमेतम् ॥
(२) लज्जितो विस्मितो वा ॥

# चाणक्यनीतिसारसंग्रहः

विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥
पण्डिते च गुणाः सर्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥
मातृवत् परदारेषु परद्रव्येषु लोष्टवत् (१) ।
आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः ॥
किं कुलेन विशालेन गुणहीनस्तु यो नरः (२) ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः (३) ॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्व्वस्य भूषणम् ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा (४) ॥

---

( १ ) मृत्खण्ड लोष्ट ॥
( २ ) तस्येति शेष ॥
( ३ ) पलाशपुष्पाणि ॥
( ४ ) यस्मादपाठितो बालो हंसमध्ये यथा बकस्तथा सभामध्ये विद्वन्मण्डल्यां न शोभतेतस्माद्धेतो यथा माता बालो न पाठित सा तस्य बालस्य शत्रु र्येन च पिता बालो न पाठित स पित तस्य बालस्य वैरी इति श्लोक विवृति ॥

वरमेको गुणी पुत्रो न च मूर्खशतैरपि (१)।
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि (२)॥
लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत् (३)।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥
लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्न तु लालयेत् ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं (४) तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः (५)।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥
उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥
नविश्वसेदविश्वस्तं मित्रस्यापि न विश्वसेत् (६)।

(१) किञ्चित् साध्यते इति शेष ॥
(२) तमो हन्यते इति शेषः ॥
(३) ताडनहेतौ सतीति शेष ॥
(४) भवतीति शेष ॥
(५) शाट अधोवस्त्रं पट ऊर्द्ध्वं प्रावरणम् ॥
(६) पूर्वकार्य्यस्याश्रितत्वात् स शत्रो स्यात् ॥

कदाचित् कुपितं मित्रं सर्वदोषं प्रकाशयेत् ॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ( १ ) ।
मित्राण्यापदि काले च भार्याञ्च विभवक्षये ॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ( २ ) ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु ( ३ ) तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥
दुर्जनः परिहर्तव्यो विद्ययालङ्कृतोऽपि सः ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केन ( ४ ) निवार्य्यते ॥
हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः ।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्ज्जनः ( ५ ) ॥
आपदर्थे धनं रक्षेद् दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥
परदारान् परद्रव्यं परीवादं परस्य च ।
परीहासं गुरोः स्थाने चापल्यञ्च विवर्जयेत् ॥

( १ ) अशुभसम्पात व्यसनं । दुरुच्छेदश्च स आपत् ॥

( २ ) कण्टकेनैव इति पाठान्तरम् ॥

( ३ ) मधु इव मधुर प्रियं वचनं मुखे । हलाहलमिव तु तीक्ष्णो द्वेषो हृदये दुर्जनस्य तिष्ठतीत्यतस्तस्य प्रियवचन विश्वासप्रयोजक न भवतीति भावः ।

( ४ ) उपायेनेति शेष ।

( ५ ) परिहर्त्तव्य इति शेष । आत्मानं सर्वतो गोपायेदित्यत्रैव तात्पर्यं न तु श्रुतेऽर्थे ॥

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं ( १ ) त्यजेत् ॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्व्वमायतनं त्यजेत् ॥
लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्म्मणा ( २ ) ।
मूर्खं छन्दानुवृत्तेन याथातथ्येन पण्डितम् ॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत् ॥
धनधान्यप्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥
धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत ( ३ ) ॥
यस्मिन् देशे न सम्मानं ( ४ ) न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित् तं देशं परिवर्जयेत् ॥
मनसा चिन्तितं कर्म्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्य्यस्य यतः सिद्धिर्न जायते ॥
कुदेशञ्च कुवृत्तिञ्च कुभार्य्यां कुनदीं तथा ।

( १ ) पृथिवी शब्देन तदधिकारो लक्ष्यते ।

( २ ) अञ्जलिरचनव्यापारेण ।

( ३ ) स्वार्थे णिच् । एवमन्यत्र यथा सम्भवम् ।

( ४ ) सम्पूर्वकस्य 'मान पूजायां' मितिधातोर्भावादीनामुपसङ्ख्यानमिति वार्त्तिकात् नपुंसके अच् प्रत्ययान्तं रूपं बोध्यम् । अमन्तत्वे पुल्लिङ्गता भविष्यत्येव ॥

कुद्रव्यञ्च कुभोज्यञ्च वर्जयेत्तु विचक्षणः ॥
ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्मात् शेषं न कारयेत् ॥
अस्ति पुत्रो वशे यस्य भृत्यो भार्य्या तथैव च ।
अभावे यति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥
दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥
माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ( १ ) ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥
अविद्याजीवन ( २ ) शून्यं दिक् शून्या चेद्बान्धवा ।
पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ( ३ ) ॥

( १ ) कोकिल कालवर्णो मधुरस्वरवान् यदि नाभविष्यत्तर्हि यथा क स्मैचिन्नारोचिष्यत तथा सुन्दर्य्यपि नारी पतिव्रता यदि न भवेत्तर्हि पत्युश्चित्तरञ्जनं कर्तुं न शक्नुयात् । लोकस्य चित्ताकर्षणहेतुरूपशब्दार्थ ।

( २ ) अविद्या विद्याया अभावस्तया उपलक्षितं जीवन शून्यमसारमित्यर्थ । यस्यां दिशि बान्धवा न भवन्ति सा दिक् शून्या जनरहिता अरण्यमेव प्रतिभाति । " अविद्य जीवनं " इति साधीयान् पाठ ।

( ३ ) गुरु पूजापात्रम् ।

अतिदर्पे (१) हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् (२) ॥
दुर्लभं प्राकृतं (३) वाक्यं दुर्लभः क्षेमकृत् सुतः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः प्रियः ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥
अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः (४) ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥
कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥
कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निर्धनो व्यवसायश्च (५) सर्वकष्टा दरिद्रता ॥
दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।

---

( १ ) सतीति शेषः । एवमन्यत्रापि ।
( २ ) अति सर्व अन्तगर्हितमिति पदच्छेदः । अत्यन्तगर्हितमशुभोदर्कमिति भावः ।
( ३ ) प्रकृतेः स्वभावादागतं प्राकृतं यथार्थमित्यर्थः ।
( ४ ) बहुव्रीहिः ।
( ५ ) व्यवसायो वाणिज्यम् ।

को विदेश सविद्याना क पर प्रियवादिनाम् ॥
आपदा कथित पन्था इन्द्रियाणामसंयम ।
तज्जय सम्पदा मार्गो येने (१) ष्ट (२) तेन गम्यताम् ॥
न च विद्यासमो बन्धुर्न च व्याधिसमो रिपु ।
न चापत्यसम स्नेहो न च दैवात् पर बलम् ॥
समुद्रावरणा भूमि प्राकारावरण गृहम् ।
नरेन्द्रावरणा देशाश्चरित्रावरणा स्त्रिय ॥
अवशपतितो राजा मूर्खपुत्रश्च पण्डित ।
अधनेन धन प्राप्य तृणवन्मन्यते जगत् ( ३ ) ॥
ब्रह्महापि (४) नर पूज्यो यस्यास्ति विपुल धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धन परिभूयते ॥
पुस्तकस्था तु या विद्या परहस्तेगत धनम् ।
कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ( ५ ) ॥
पादपाना भय वातात् पद्माना शिशिराद्भयम् ।
पर्वताना भय वज्रात् साधूना दुर्जनाद्भयम् ॥
प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणा ।
यश स्वर्गनिवासश्च विपुलश्च धनागम ॥

( १ ) पथे त योष ।
( २ ) इष्मिति भाव क्त ।
( ३ ) पूर्वार्द्धान्वय कर्त्तरि उत्तरार्द्धान्वये तु कर्मणि लकार । एवं जग त्पदस्यापि पर्यायेण द्वितीयान्तत्वप्रथमान्तत्वे अनुसन्धानीये ।
( ४ ) अत्र धनस्तुतिर्धनवज्जरपूजापरा । न तु धनवद्विप्रनरपूजापरेति ।
( ५ ) स्वकार्य्यस्यासाधकत्वादिति भाव ।

मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरके गमनं तथा ॥

बहुभिर्मूर्खसङ्घातैरन्योन्यपशुवृत्तिभिः ।
प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥

असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते ।
शिला तरति पानीयं गीतं गायति वानरः ॥

सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि ।
भार्य्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥

हेला स्यात्कार्यनाशाय बुद्धिनाशाय निर्द्धनम् (१) ।
याचना माननाशाय कुलनाशाय भोजनम् (२) ॥

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्यते ॥

प्रथमे (३) नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥

कुदेशमासाद्य कुतोऽर्थसञ्चयः कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपणके (४) देशे रजकः किं करिष्यति ॥

(१) धनानामभावो निर्धनम् ।
(२) पानापानाविचारपूर्वकमिति शेषः । भक्ष्याभक्ष्यविवेकशून्यमिति वा ।
(३) वयसीति शेषः । एवमन्यत्रापि । (४) क्षपणको बौद्धभिक्षुविशेषः ।

# हितोपदेशसारसंग्रहः ।

---

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् (१) ।
अहार्य्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥
सङ्गमयति विद्यैव नीचगापि नर सरित् ।
समुद्रमिव दुर्धर्षं नृप भाग्यमतः परम् ॥
विद्या ददाति विनय विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मस्ततः सुखम् (२) ॥
विद्या शस्त्रञ्च शास्त्रञ्च द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥
अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥
गुणिगणगणनारम्भे न पतति कठिनी (३) सुसम्भ्रमा यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥

---

(१) नास्त्युत्तमं यस्मादिति बहुव्रीहिः ।
(२) आप्नोतीति अनुपज्ञनीयम् ।
(३) लेखनार्थं खटिका ।

धर्म्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा ( १ ) वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥
उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥
काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥
दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे ( २ ) धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥
विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

( १ ) विभाषा पुरुषे इति सूत्रेण षष्ठे कोः कादेशः कुत्सितः पुरुष इत्यर्थे । यद्वा ईषदर्थे इति सूत्रेण नित्यं कोः कादेशः । ईषत् पुरुषः कापुरुषः ।
(२) समर्थे धनवति। कर्म्मणो धनस्याधारत्वविवक्षया सम्प्रदाने सप्तमी बोध्या ।

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भय क्रोधं आलस्यं दीर्घसूत्रता ( १ ) ।
अल्पानामपि वस्तूनां संहतिः ( २ ) कार्य्यसाधिका ।
तृणैर्गुणत्व ( ३ ) मापन्नैर्बध्यन्ते मत्तदन्तिनः ॥
संहतिः श्रेयसी पुंसां स्वकुलैः स्वल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥
दारिद्र्याद्ध्रियमेति (४) ह्रीपरिगतः सत्त्वा (५) त्परिभ्रश्यते ।
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते ( ६ ) ॥
निर्विन्नः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते ।
निर्बुद्धिः क्षयमेत्यहो निधनता (७) सर्वापदामास्पदम् ॥
वरं वन व्याघ्रगजेन्द्रसेवितं
द्रुमालयः पक्कफलाम्बुभोजनम् ।
तृणानि शय्या परिधानवल्कलं ( ८ ) ।
न बन्धुमध्ये धनहीनजीवनम् ॥
देशमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः ।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥

---

( १ ) कार्यसिद्धौ दीर्घ काल विलम्बमिति यावत् सूत्रयति सूत्रयतीति दीर्घसूत्र ।

( २ ) समुदाय । ( ३ ) गुणो रज्जु ।

( ४ ) " कुत्थवि संजुत्तपरो वण्णो लहु होइ " (कुत्रापि "इमादौ" संयुक्तपरो वर्णो लघुर्भवति ) इति वचनात् एतस्यस्य इकारो लघुरेव पठनीय ।

( ५ ) धैर्यात् ( ६ ) निर्वेद खेदम् ।

( ७ ) अत्र नि इत्यव्ययं निर् इत्यस्यार्थे द्रष्टव्यम् ।

( ८ ) समासाद्विधेयाविमर्शो दोष । वसनं च वल्कलमिति पाठान्तरम् ।

अधोऽधः (१) पश्यतः कस्य महिमा नोपजायते ।
उपर्य्युपरि पश्यन्तः सर्व्व एव दरिद्रति ( २ ) ॥
आलस्यं स्त्रीसेवा सरोगिता जन्मभूमिवात्सल्यम् ।
सन्तोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥
अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया ।
रक्षितं वर्धयेन्नित्यं वृद्धं तीर्थेषु (३) निक्षिपेत् ॥
अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम् ।
अवन्ध्यं दिवसं कुर्य्याद्दानाध्ययनकर्मसु ॥
जलबिन्दुनिपातेन क्रमशः पूर्य्यते घटः ।
स हेतुः सर्वविद्यानां धर्म्मस्य च धनस्य च ॥
हीनसेवा न कर्तव्या कर्त्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिकी (४)हस्ते वारुणीत्यभिधीयते(५) ॥
मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः
करिणो हस्तिपकाहतः ( ६ ) क्वणन् ॥

---

( १ ) आत्मापेक्षया निम्नश्रेणीस्थाल्लोकान् पश्यन्सर्व आत्मनो महत्त्वं बुध्यते परन्तु स्वापेक्षया ऊर्ध्वश्रेणीस्थाल्लोकान् पश्यन्नात्मनो हीनत्वञ्चानुभवतीति भाव ।

( २ ) दरिद्रा दुर्गतौ इति धातोर्लटि रूपमिदं पाठात् अभ्यस्तत्वात् अत् ।

( ३ ) सत्पात्रेषु ।

( ४ ) मद्यविक्रेत्री ।

( ५ ) वारुणी मद्यम् ।

( ६ ) हस्तिनो कण्ठे हस्तिपकहस्तेन ताडितः ।

# गुरूणां पूजा ।

युधिष्ठिर उवाच ॥

महानयं धर्मपथो बहुशाखश्च भारत ।

किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥

किं कार्यं सर्वधर्माणां गरीयो भवतो मतम् ।

यथाहं परमं धर्ममिह (१) च प्रेत्य चाप्नुयाम् ॥

भीष्म उवाच ॥

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।

इह (२) युक्तो(३) नरो लोकान् यशश्च(४) महदश्नुते ॥

सम्पगेतेषु वर्तस्व त्रिषु लोकेषु भारत ।

यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहत्फलम् ॥

नैतानतिशयेज्जातु (५) नात्यश्नीयान्न (६) दूषयेत् (७) ।

नित्यं परिचरेश्चैव तद्वै सुकृतमुत्तमम् ॥

कीर्त्तिं पुण्यं यशो लोकांश्चाप्स्यसे राजसत्तम ।

---

(१) धर्मफलमित्याशय ।

(२) अस्यां पूजायामित्यर्थ. ।

(३) युक्त । आयुक्त ।

(४) लोकान् स्वर्गादीन् ।

(५) अतिशयेद् भोगेषु वा क्रियासु वा स्वस्याधिक्यं न दर्शयेत । परस्मैपदमार्षम् ।

(६) मानसिकमन्य केवलं स्वयमेव मिष्टादीनि नाश्नीयात् किन्तु तेभ्यो-ऽर्पयित्वा तै प्रसादीकृतानि स्वयमश्नीयात् । (७) उपालभेत् ।

सर्वे तस्यादृता (१) लोका यस्यैते त्रय आदृताः ॥
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ।
न चायं न परो लोकस्तस्य चैव परन्तप ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः (२)
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते ॥
न चान्यदपि कल्याणं परत्र समुदाहृतम् ॥
य आवृणोत्यवितथेन (३) कर्मणा (४)
ऋतं (५) ब्रुवन्नमृतं संप्रयच्छन् (६) ।
तं वै मन्येत (७) पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् (८) ॥
विद्यां श्रुत्वा (९) ये गुरुं नाद्रियन्ते
प्रत्यासन्ना (१०) मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
नान्यस्तेभ्यः पापकृदस्ति लोके ॥

---

(१) कर्त्तरि षष्ठी ।
(२) उत्तरार्द्धं पूर्वं योजनीयम् ।
(३) अनुगृह्णाति ।
(४) प्रवचनेन ।
(५) सत्यं वेदमित्यर्थः ।
(६) ऋतवचनमकृतदानेनोपमीयते ।
(७) आद्रियेत ।
(८) स्मरन् कृतज्ञ सन्नित्यर्थः ।
(९) अधीत्येत्यर्थः ।
(१०) काले काले गुरुसमीपमुपेता सन्त नाद्रियन्ते प्रत्यासन्ना विपर्ययेण विशीर्णा भ्रष्टा भवन्तीति नीलकण्ठ ।

यथैव ते गुरुभिर्भावनीयाः
तथा (१) तेषां गुरवोऽप्यर्चनीयाः ॥
न तेऽवमानमर्हन्ति न तेषां दूषयेत्कृतम् ।
गुरूणामेव सत्कारं विदुर्देवा महर्षिभिः ॥
उपाध्यायं पितरं मातरं च येऽभिद्रुह्यन्ते (२) मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ॥
भृतो वृद्धो यो न बिभर्ति पुत्रः (३) स्वयोनिजः पितरं मातरं च ।
तद्वै पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ॥
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः ।
चतुर्णां वयमेतेषां निष्कृतिं (४) नानुशुश्रुम ॥
एतत्सर्वमनिर्देशेनैवमुक्तं (५) यत्कर्तव्यं पुरुषेणेह लोके ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं सर्वान् धर्माननुसृत्यैतदुक्तम् (६)॥

---

(१) पूर्वं यथा ते पुत्रशिष्यादय गुरुभिर्भावनीया रक्षणावेक्षणयत्नविषया आसंस्तथा तैः पुत्रशिष्यादिभिरपि स्वासामर्थ्यकाले ते गुर्वादयोऽपि अर्चनीया सेवया सयत्नं सत्कार्या इत्यर्थः ।

(२) आत्मनेपदमार्षम् ।

(३) औरस इत्यर्थः ।

(४) नरकान्निस्तारम् ।

(५) अनिर्देशेन विस्तरेण न तु निर्देशमात्ररूपेण संक्षेपेणेति नीलकण्ठः ।

(६) एकीकृत्येति नीलकण्ठः ।

# वाल्मीकीयरामायणम् (१) ॥

## अयोध्यावर्णनम्

कोसलो नाम मुदितः (२) स्फीतो (३) जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता (४) स्वयम् ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा (५) ॥
राजमार्गेण (६) महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन (७) जलसिक्तेन नित्यशः ॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास (८) दिवि देवपतिर्यथा ॥

---

(१) अयते ज्ञायतेऽनेनेति अयनं चरितं रामस्यायनं रामायणं ।
(२) राजभिर्धर्म्मेण परिपालनात् ।
(३) उत्तरोत्तरवृद्धिं प्राप्त ।
(४) अन्तर्भावितण्यर्थप्रयोग । निर्मा रता ।
(५) महापथो बहिर्मार्ग ।
(६) राजद्वारात्पुर प्रवृत्तो राजमार्ग ।
(७) मुक्तं विकसितम् ।
(८) पूर्वापेक्षयाधिकलोकवसतिमतीं चकार ।

कपाटतोरणवती ( १ ) सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुषिता ( २ ) सर्वशिल्पिभिः ॥
सूत ( ३ ) मागधसम्बाधा श्रीमतीमतुलप्रभाम् ।
उच्चाट्टाल ( ४ ) ध्वजवतीं शतघ्नीशतसङ्कुलाम् ( ५ ) ॥
वधूनाटकसङ्घैश्च ( ६ ) संयुक्तां सर्वतः पुरीम् ।
उद्याना (७) म्रवणोपेता (८) महतीं सालमेखलाम् (९) ॥
दुर्गगम्भीरपरिखा (१०) दुर्गा (११) मन्यै (१२) र्दुरासदाम् ।
वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥
सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् ( १३ ) ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥

---

( १ ) तोरण वहिर्द्वारालङ्कारदारुबन्ध ।
( २ ) प्राकारोपरीतिशेष ।
( ३ ) सूता स्तुतिपाठका । मागधा वंशावलिकथका ।
( ४ ) अट्टाला उपरिगृहा ।
( ५ ) शतघ्नी नाम प्राकारसरक्षणार्थमयोभारनिर्मिता आयुधविशेषा । लौहकण्टककीलितयष्टिविशेष इति मल्लिनाथ । शतघ्नीति चतुस्ताला लौहकण्टकसञ्चिता यष्टिरिति कशव ।
( ६ ) नाटक नाट्यशाला । वधूनां नाटकशालासमुदायै सर्वतो युक्ताम् ।
( ७ ) क्रीडार्थं पुष्पवाटिकोद्यानम् ।
( ८ ) प्रनिरित्यादिना दाम्रम् ।
( ९ ) साल प्राकार । शाला सालवृक्षा इति वा ।
(१०) जलेन दुर्गा गम्भीरा अगाधा परिखा यस्याम् ।
(११) दु खगम्याम् ।
(१२) शत्रुभिरशक्यसमीपगमनाम् ।
(१३) राजमाह्य करो बलि उपायन वा तदर्पणं कर्म्म येषां ते तै स्थाने स्थाने देवोपहारार्पणैरिति वा ।

प्रासादैरत्नविकृतैः (१) पर्वतैरिव शोभिताम् ।
कूटागारैश्च (२) सम्पूर्णामिन्द्रस्येवामरावतीम् ॥
चित्रामष्टापदाकारां (३) वरनारीगणायुताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् (४) ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ।
शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् (५) ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥
विमानमिव सिद्धानां (६) तपसाधिगतं दिवि ।
सुनिवेशितवेश्मान्तां (७) नरोत्तमसमावृताम् ॥
ये च बाणैर्न विध्यन्ति विविक्तं (८) मपरापरम् (९) ।
शब्दवेध्यं च(१०) विततं(११) लघुहस्ता (१२) विशारदाः ॥

(१) रत्ननिर्म्मितैः ।

(२) कूटागाराणि स्त्रीणां क्रीडागृहाणि ।

(३) अष्टापद सुवर्णं अष्टन सञ्ज्ञायामिति दीर्घः । सुवर्णफलेन कृत आकार अलङ्कारो यस्या इत्येके । द्यूतफलकाकारामित्यन्ये ।

(४) विमानगृह सप्तभूमिकगृह ।

(५) इक्षुकाण्डरससमानस्वादूदकवती ।

(६) प्राप्तयोगसिद्धीनां देवानामिति वा ।

(७) सुष्ठु निवेशितो वेश्मनामन्त आद्यप्रवेशो यस्याम् अथवा सुनिवेशितवेश्मभि अन्ताम् रम्याम् ।

(८) स्वसमूहात् भ्रष्टमसहायमेकाकिनम् ।

(९) परे पित्रादयोऽपरे पुत्रादय यस्य न सन्ति तमनाथमित्यर्थः । वंशस्यैकतन्तुमित्येके । परकीयस्वकीयभिन्न केवलमेकाकिनमित्यन्ये ।

(१०) शब्दमात्रानुमितसत्ताकं वेधयोग्यं प्रच्छन्नमिति यावत् ।

(११) विरुध्य युद्धं कृत्वा प्रपलायितम् ।

(१२) लघुः क्षिप्र । हस्तशब्देन अस्त्रशस्त्रप्रयोगे तद्व्यापारो लक्ष्यते ।

सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद् बाहुबलैरपि (१) ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः (२) ।
पुरीमावासयामास राजा दशरथस्तदा ॥
तामग्निमद्भि (३) र्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः (४) ॥
तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥
बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः ।
धनैश्च सञ्चयै (५) श्चान्यैः शक्रवैश्रवणोपमः ॥
यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा लोकस्य परिरक्षिता ॥
तेन सत्याभिसंधेन त्रिवर्ग (६) मनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥

---

(१) बाहुबलशब्देन नियुद्ध लक्ष्यते ।

(२) आत्मानं सारथिञ्चाश्वान् रक्षन् युध्येत यो नर । स महारथसंज्ञ स्यात् । एको दशसहस्रैर्योद्धा च ।

(३) आहिताग्निभि ।

(४) मुख्यै ।

(५) धान्यादीनाम् ।

(६) धर्मार्थकामास्त्रिवर्ग ।

तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥
नाल्पसंनिचयः ( १ ) कश्चिदासीत्तस्मिन्पुरोत्तमे ।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ( २ ) ॥
कामी वा न कदर्यो ( ३ ) वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां ( ४ ) नाविद्वान्न च नास्तिकः ॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
मुदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् ( ५ ) ।
नामृष्टो न नलिप्ताङ्गो नासुगन्धश्च विद्यते ॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ( ६ ) ।
नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥
नानाहिताग्निर्नायज्वा ( ७ ) न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न चावृत्तो ( ८ ) न सङ्करः ॥

---

( १ ) सतामुत्कृष्टवस्तूनां निचय संनिचय ।

( २ ) अर्थाभावेऽव्ययीभावे नञ् । तत्पुरुष वा । ततो मतुप् ।

( ३ ) आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्य पितरौ भ्रातॄन् स कदर्य इति स्मृत ।

( ४ ) शक्यमिति सामान्ये नपुंसकमिति रामानुज । शक्यञ्चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुमिति महाभाष्ये सदृश प्रयोगो दृश्यते ।

( ५ ) धर्माविरुद्ध सुखभोगो भोग ।

( ६ ) निष्क उरोभूषणम् ।

( ७ ) सोमयाजी यज्वा ।

( ८ ) अवृत्त दुश्चरित्र । कुत्सायां नञ् ।

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च ( १ ) प्रतिग्रहे ॥

नास्तिको नानृती वापि न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित् ॥

नाषडङ्गविदत्रास्ति नाव्रतो नाबहुश्रुतः ।
न दीनः क्षिप्तचित्तो ( २ ) वा व्यथितो वापि कश्चन ॥

कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥

वर्णेष्वग्र्यचतुर्थेषु ( ३ ) देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च ( ४ ) शूरा विक्रमसंयुताः ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥
क्षत्रं ब्रह्ममुखं ( ५ ) चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वकर्मनिरतास्त्रीन्वर्णानुपचारिणः ( ६ ) ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥

---

( १ ) सङ्कुचिताः ।

( २ ) उन्मादग्रस्तेनेति शेषः ।

( ३ ) अग्र्यो ब्राह्मणश्चतुर्थः शूद्रास्तिगणमेषु ।

( ४ ) वदान्यो दानशौण्डो वाग्मी वा ।

( ५ ) ब्राह्मणप्रधानम् ।

( ६ ) उपचारिण सेवका ।

योधानामग्निकल्पानां पेशलानां ( १ ) ममर्षिणाम् ।
सम्पूर्णा कृतविद्यानां ( २ ) गुहा केसरिणामिव ॥
काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजै ( ३ ) र्नदीजैश्च पूर्णा हरिहयोत्तमैः ( ४ ) ॥
विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ॥
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ।
सा योजने द्वे च भूयः सत्यनामा प्रकाशते ( ५ ) ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥

तां सत्यनामां ( ६ ) दृढतोरणार्गलां
गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसङ्कुलां
शशास वै शक्रसमो महीपतिः ॥

---

( १ ) अकृन्तिनानाम् ।

( २ ) योधानां सङ्घै सम्पूर्णा इति योजना ।

( ३ ) पारसीका वनायुजा इति हलायुध ।

( ४ ) काम्बोजादयो देशविशेषा यत्राश्वा उत्तमा उत्पद्यन्ते । हरेरिन्द्रस्य इव उच्चैःश्रवा स इवोत्तमा ये ते ।

( ५ ) योद्धुमशक्यैत्यन्वर्थनामेत्यर्थः ।

( ६ ) सत्यभाष्यामित्याहिना पक्षे डाप् ।